आश्चर्य्याणामिवाश्चर्य्यं इदमेकन्तु मे शृणु । विमले यन्मया दृष्टमम्बरे सूर्य्यसंश्रयात् । १३८७०

पुरा मध्याह्नसमये लोकांस्तपति भास्करे । प्रत्यादित्यप्रतीकाशः सर्व्वतः समदृश्यत ।

स लोकांस्तेजसा सर्व्वान् स्वभासा निर्व्विभासयन् । आदित्याभिमुखोऽभ्येति गगनं पाटयन्निव ।

हुताहुतिरिव ज्योतिर्व्याप्य तेजोमरीचिभिः । अनिर्द्देश्येन रूपेण द्वितीय इव भास्करः ।

तस्याभिगमनप्राप्तौ हस्तौ दत्तौ विवस्वता । तेनापि दक्षिणो हस्तो दत्तः प्रत्यर्च्चनार्थिना ।

ततो भित्त्वैव गगणं प्रविष्टो रश्मिमण्डलं । एकीभूतञ्च तत्तेजः क्षणेनादित्यताङ्गतं । १३८७५

तत्र नः संशयो जातस्तयोस्तेजःसमागमे । अनयोः को भवेत् सूर्य्यो रथस्थो योऽयमागतः ।

ते वयं जातसन्देहाः पर्य्यपृच्छामहे रविं । क एष दिवमाक्रम्य गतः सूर्य्य इवापरः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने चतुःषष्ट्यधिकत्रिशततोऽध्यायः ॥ २६४ ॥

॥ सूर्य्य उवाच ॥ नैष देवोऽनिलसखो नासुरो न च पन्नगः । उञ्छवृत्तिव्रते सिद्धो मुनिरेष दिवङ्गतः ।

एष मूलफलाहारः शीर्णपर्णाशनस्तथा । अब्भक्षो वायुभक्षश्च आसीदिप्रः समाहितः ।

भवश्चानेन विप्रेण संहिताभिरभिष्टुतः । स्वर्गद्वारे कृतोद्योगो येनासौ त्रिदिवङ्गतः । १३८८०

असङ्गतिरनाकाङ्क्षी नित्यमुञ्छशिलाशनः । सर्व्वभूतहिते युक्त एष विप्रो भुजङ्गमाः ।

न हि देवा न गन्धर्व्वा नासुरा न च पन्नगाः । प्रभवन्तीह भूतानां प्राप्तानामुत्तमां गतिं ।

एतदेवंविधं दृष्टमाश्चर्य्यं तत्र मे द्विज । संसिद्धो मानुषः कामं योऽसौ सिद्धगतिं गतः ।

सूर्य्येण सहितो ब्रह्मन् पृथिवीं परिवर्त्तते ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने पञ्चषष्ट्यधिकत्रिशततोऽध्यायः ॥ २६५ ॥

॥ ब्राह्मण उवाच ॥ आश्चर्य्यं नात्र सन्देहः सुप्रीतोऽस्मि भुजङ्गम । अन्वर्थोपगतैर्व्वाक्यैः पन्थानञ्चास्मि दर्शितः । १३८८५

स्वस्ति तेऽस्तु गमिष्यामि साधो भुजगसत्तम । स्मरणीयोऽस्मि भवता सम्प्रेषणनियोजनैः ।

॥ नाग उवाच ॥ अनुक्त्वा हृद्गतं कार्य्यं क्वेदानीं प्रस्थितो भवान् । उच्यतां द्विज यत् कार्य्यं यदर्थं त्वमिहागतः ।

उक्तानुक्ते कृते कार्य्ये मामामन्त्र्य द्विजर्षभ । मया प्रत्यभ्यनुज्ञातस्ततो यास्यसि सुव्रत ।

न हि मां केवलं दृष्ट्वा त्यक्त्वा प्रणयवानिह । गन्तुमर्हसि विप्रर्षे वृक्षमूलगतो यथा ।

त्वयि चाहं द्विजश्रेष्ठ भवान्मयि न संशयः । लोकोऽयं भवतः सर्व्वः का चिन्ता मयि तेऽनघ । १३८९०

॥ ब्राह्मण उवाच ॥ एवमेतन्महाप्राज्ञ विदितात्मन् भुजङ्गम । नातिरिक्तास्त्वया देवाः सर्व्वथैव यथातथं ।

य एव त्वं स एवाहं योऽहं स तु भवानपि । अहं भवांश्च भूतानि सर्व्वे यत्र गताः सदा ।

आसीत्तु मे भोगिपते संशयः पुण्यसञ्चये । सोऽहमुञ्छव्रतं साधो चरिष्याम्यर्थसाधनं ।

एष मे निश्चयः साधो कृतं कारणमुत्तमं । आमन्त्रयामि भद्रन्ते कृतार्थोऽस्मि भुजङ्गम ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने षट्षष्ट्यधिकत्रिशततोऽध्यायः ॥ २६६ ॥

॥ भीष्म उवाच ॥ स चामन्त्र्योरगश्रेष्ठं ब्राह्मणः कृतनिश्चयः । दीक्षाकाङ्क्षी तदा राजंश्च्यवनं भार्गवं श्रितः । १३८९५

स तेन कृतसंस्कारो धर्म्ममेवाभितस्थिवान् । तथैव च कथामेतां राजन् कथितवांस्तदा ।

भार्गवेणापि राजेन्द्र जनकस्य निवेशने । कथैषा कथिता पुण्या नारदाय महात्मने ।

नारदेनापि राजेन्द्र देवेन्द्रस्य निवेशने । कथिता भरतश्रेष्ठ पृष्टेनाक्लिष्टकर्म्मणा ।

देवराजेन च पुरा कथितैषा कथा शुभा । समस्तेभ्यः प्रशस्तेभ्यो विप्रेभ्यो वसुधाधिप । १३९४०

यदा च मम रामेण युद्धमासीत् सुदारुणं । वसुभिश्च तदा राजन् कथेयं कथिता मम ।

पृच्छमानाय तत्त्वेन मया चैवोत्तमा तव । कथेयं कथिता पुण्या धर्म्या धर्म्मभृताम्बर ।

तदयं परमो धर्म्मो यन्मां पृच्छसि भारत । आसीद्वीरो ह्यनाकाङ्क्षी धर्म्मार्थकरणे नृप ।

स च किल कृतनिश्चयो द्विजो भुजगपतिप्रतिदेशितात्मकृत्यः । यमनियमसहो वनान्तरं परिगणितोञ्छशिलाशनः प्रविष्टः ।

इति श्रीमहाभारते शान्तिपर्व्वणि मोक्षधर्म्मपर्व्वण्युञ्छवृत्त्युपाख्याने सप्तषष्ट्यधिकत्रिशततमोऽध्यायः ॥ ३६७ ॥

समाप्तञ्चेदं शान्तिपर्व्व ॥

यद्यत्र व्यासोक्ताध्यायश्लोकसंख्यान्यूनातिरिक्तत्वं दृष्टं भवेत्तल्लिपिकरप्रमादेन बोध्यमिति ।